## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ० प्र०) भारतम्

संपुटः ४ | 15 AUGUST 1966 | क्रमांकः ८

स्वतन्त्रदिनविशेषांकः] शकवर्षः १८८८ [मूल्यम् ८० पैसाः

# विषयसूचिका

# भारत भारति !

भारतभारति भावय माम् ।
परिभावय विमतान् धीविकृतान् ॥ ॥ भारत ॥

मलयजशिशिरे ! मंजुलमधुरे !
महाप्रभावभावितनरखचरे ! ॥ भारत ॥

नवरससरले ! नवगुणकोमले !
नटगायकरसनांचलशीतले ! ॥ ॥ भारत ॥

बहुमुखललिते ! बहुलपदयुते !
सहकृतबहुभाषापरिशोभिते ! ॥ ॥ भारत ॥

चकचकितांगे ! विकचितनिजरंगे !
सुकविनिकरकामितनिजसंगे ! ॥ ॥ भारत ॥

## शिक्षायोगेन संस्कृतमूलच्छेदः

भारतीय शिक्षायोगेन भाषात्रयसिद्धान्तः स्वीकृतः । तत्र —

(क) मातृभाषा प्रादेशिकी भाषा ।

(ख) संघीया राजभाषा सहराजभाषा वा ।

(ग) एका आधुनिका भारतीयभाषा युरोपीया वा भाषा या क ख विभागगृहीतभिन्ना भवेत् ।

इति तत्र सुचितम् ।

एतेन निर्देशेन संस्कृतस्य स्थानमेव नास्ति । सा क–विभागे नान्तर्भवति यतः सा मातृभाषा न भवति, प्रादेशिकी वा न भवति । तथैव ख – विभागेपि नान्तर्भवति । सर्वकारेण राजभाषा हिन्दीति सहराजभाषा आंग्लीति च घोषणात् । सा (ग) विभागेपि न प्रविशति यतस्सा भारतीयापि नाधुनिकी, अपितु प्राचीना । अतः येन केनापि द्वारेण संस्कृतस्य प्रवेशो नास्ति । किन्तु (ख) विभागे संघीयत्वेन तत्प्रवेशः सुसाध्यो यद्यपि राजभाषया सहराजभाषया च स्पर्धायां सा न दृढा तिष्ठेत् । उद्योगप्रियाणां जनानां राजभाषार्हतायां असत्यां जीविकाया दौर्लभ्यभयं भवति । तस्मात् तद्विकल्पे सर्वैरपि हिन्दी एव अभ्यस्येत । अतः संस्कृतस्य स्थानमेव शून्यं भवेत ।

औत्तराहाः (क) हिन्दीं महाराष्ट्र्यादिका (ख) आंग्लम् (ग) महाराष्ट्रादिकां वा पठेयुः । दाक्षिणात्याः (क) आंध्रतमिलादिकां (ख) हिंदीं (ग) आंग्लं चाभ्यसेयुः । एवं च सति न संस्कृतस्य किंचिदपिस्थानं वर्तते । तस्मात त्रिभाषासूत्रं संस्कृतस्य मूलच्छेदे लवित्रं सम्भाव्यते अस्माभिः ।

त्रिभाषासूत्रं केन वा सृष्टं नैव ज्ञायते । बालानां कृते भाषात्रयादधिक-भाषाणां अभ्यासः कष्टतर इति वादस्तु न साधुतरः । प्रदेशसन्धिस्थलेषु वर्तमाना जना बालका अपि विद्याहीना अपि बहुभाषाः भाषन्ते । उदाहरणतया आंध्रद्रविड़ कर्णाटकप्रदेशसन्धौ वर्तमाना जनाः बाल्यात् प्रभृति आंध्रीं द्राविडीं कर्णाटीं च जानन्ति भाषन्ते च । ते एव महाराष्ट्राश्चेत गृहे तस्यापि अभ्यासात् चतुर्भाषामपि उपयुञ्जते । एवं च बहुभाषाणां अभ्यासः बालकस्य कष्टकर इति तु न, अपि तु तद्बोधने सुलभा पद्धतिरावश्यकी । बालमनोनुगुणया संभाषणशैल्या यदि बोध्येत बह्वयः भाषाः ते अनायासमेव ज्ञानीयुः ।

अपि चेमं ऋजुं प्रश्नं विद्याधिकानां पुरतः स्थापयामि । आलोचयन्तु सहृदयाः ।

अधुना भाषात्रयेण सह बहवः अंशाः गणितम्, विज्ञानम्, पौरधर्म इत्यादिकांशा अध्याप्यन्ते । ते च बालकानां मनस्तत्वाननुकूला एव अतिभारवहा-भवन्ति । एष विषयः बोधकानां उपाध्यायानां सकलानामनुभवगोचर एव भवति । आत्मक्षेत्रविशेषज्ञानं दूरीकृत्य विदेशविशेषबोधनेन बालका भ्रष्टसत्वा भवन्ति । लौकिकज्ञानहीनाश्च भवन्ति । एवं करणे बालकमनसः क्लेशने को वा मानदण्डः प्रमाणितो नैव ज्ञायते ।

हृदिहस्तमर्पयित्वा आलोचयन्तु सहृदयाः विद्यावन्तः आत्मपुत्रेभ्यः तत्त-द्वयसः अनुगुणा एव विषया बोध्यन्ते वा ते च विषयाः तैः ज्ञायन्ते वा इति ।

अतः त्रिभाषासूत्रं त्रोटयित्वा संस्कृतमपि चतुर्थीमंगीकृत्य क—निर्दिष्टभाषयोः भारः अर्धं ह्रसयिष्यते चेत्साधु भवेत । तदा प्रादेशिकभाषायाः मातृभाषाया वा भारे अर्धं ह्रसितेऽपि तद्द्वयोः संस्कृतस्योपकारकत्वात् तत्तद्भाषायां बालकस्येतरापेक्षया ज्ञानमधिकमेव भवेत् । एतेन तत्तद्भाषागौरवं सुरक्षितं भवति. संस्कृतं च सर्वत्रा-नुस्यूतं भवति ।

अथवा त्रिभाषासूत्रमनुरुध्यैव काचन रीतिरादर्तव्या। (ग)विभागे (संघीया भाषा) संस्कृतमवश्यपठनीयं भवेत्। (ख) विभागे च संघीयभाषायाः प्रवेशो मास्तु। एतेन च औत्तराहाः (क) हिन्दी मराठ्यादिकां पठेयुः, ख-विभागे हिन्दीप्रान्तेतरे आंग्ल, तदितरे हिन्दीं आंग्लं वा पठेयुः। ते उभयेऽपि ग-विभागे संस्कृतं अरबीं एतादृशीं वा पठेयुः। एवं च आंग्लाभिमानिनां हिन्दीविरक्तानां दाक्षिणात्यानां अभिमतं सेत्स्यति, आंग्लविरोधिनां औत्तराहाणां च अभिलाषः पूर्येत। ग-विभागे यूरोपीयभाषायाः प्रवेश एव मास्तु, संघीयभाषायाः विकल्प एव अनिष्ट।

अत्र त्रिभाषासूत्रविषये आंध्रप्रदेशसर्वकारेण स्थापिता संस्कृयविधानसभा आंध्रप्रदेशे सर्वत्र परिभ्रम्य प्रमुखानां अभिप्रायान् सञ्चिनोति। मन्ये मेधाविनः सहृदयाः उचितं मार्गं सूचयित्वा भारतसंस्कृतेः मूलभूतस्य संस्कृतस्य उच्छेदो यथा न भवेत् तथा यथाशक्ति प्रयतेरन्निति।

अयमेव शुभसमयः संस्कृतोन्नतिसम्पादने यतः राष्ट्रप्रदेशसर्वकाराः संस्कृतमाहात्म्यं जानन्तः तत्कृते यत्किमपि कर्तुमाचेष्टन्ते। अतः सदवकाशमिम अनपोह्य यथाशक्ति संस्कृतभारत्याः पूजने स्वस्वशक्तिः उपायनीयेति संस्कृतप्रचरकान् धन्यान् विज्ञापयामि।

# राजाजीकथा २७

## व्यसनी चेत् कथं सुखी ?

लेखकः – आ० वरदराजन्

बालचन्द्रः गुडप्रियः । गुडं तत्कृतं अपूपादिकं वा यदि लब्धं तर्हि तस्य, त्यागबुद्धिर्नैव भवति, भवतीति पक्षेऽपि त्यागबुद्धेरेव त्यगबुद्धिरिति रहस्यम् ।

वैद्याः तस्य देहस्थितिं परीक्ष्य – अस्य देहो रुजाक्रांतः, मधुरं वस्तु अपथ्यमस्य; अतः तत्सेवनं निषिद्धमित्याहुः ।

एतादृशं कठिनं पथ्यं न तस्मै रोचते । कथंचित् स गुडं, शर्करां तन्निर्मितानि भक्ष्याणि नानाविधानि सरहस्यं चोरयित्वा वा संपाद्य भक्षयन्नास्त । पितरौ जानन्तावपि एतन्निरोद्धु न प्रभवतः स्म ।

किं वा क्रियतां ? निरोधे कृते मद्वत्सः इतोऽपि दुर्गतिं गच्छेत् – इति माता सानुनयं साश्रुनयना पुत्राय रक्षणकवचं प्रायच्छत् ।

★ ★ ★

एवंत्वे नाऽन्यः पन्था जनकाय विद्यते ! दिङ्मूढस्स कुम्भकोणमेव गतः । तत्र हि श्रीशंकराचार्यस्वामिनो विराजन्ते । अतस्तेषां सन्निधौ शरणं गतः ।

स्वामिनः प्राहुः —

"बालकं नीत्वा याहि, कस्मिंश्चित् भक्ष्यापणके उपवेशय, यथेच्छं स मधुरभक्ष्याणि भक्षयतु, इति ।

स्वामिपादानामियं सूचना पितुस्तस्य आश्चर्यं अजनयत् । स गत्वा भार्यया सह पर्यालोचितवान् ।

"यथा कथंवाऽस्तु, यत्किमपि वाऽस्तु, स्वामिनोऽस्माकं गुरुचरणाः; तेषां आदेशोऽवश्य पालनीयः । अस्मत्सुहृद्वरो रामलालोऽस्ति ननु । तस्यैव आपणे अस्मत्पुत्रं प्रवेशयाव" इति सा प्राह ।

बालचन्द्रः रामलालमिष्टान्नापणे कर्मकरोऽभवत् । "वेतनं तु नास्ति यथेच्छं मिष्टकभक्षणं पुनः कर्तुं शक्यम्" - इति आपणिकोऽन्वग्रहीत । किमपेक्षितमितःपरम् ? सिद्धमभीप्सितम् । बालचन्द्रः आनन्दसागरे निमग्नः ।

यदा यदा हि तस्याशा वर्धते भक्ष्यभक्षणे ।
भक्षयामास स तदा यथेच्छं मिष्टकानि हि ॥

त्रिचतुरा दिवसाः व्यतीताः । पञ्चमेऽहनि बालचन्द्रस्य ("पूर्वाषाढा - उत्तराषाढा") - विरेचनमारेभे । न वाऽन्नं, न पानीयम् । मिष्टकानि कियत् इष्टानि !! अहो, तत्स्मरणमात्रेणैव वमनं भवति, अथवा कुक्षौ महान् विक्षोभः । त्रीणि दिनानि - महत्कष्टं ! महान् क्लेशः !! महती दुरवस्था । चिकित्सया कथञ्चित् विरेचनं निरुद्धम् । महताऽयासेन स स्वस्थश्चासीत् ।

परन्तु तदारभ्य बालचन्द्रः शपथं कृतवानिव मिष्टकानि न स्मरति । तस्य तान्यरोचकान्यासन् । पश्यत एव सतस्तानि वांतिर्जायते तस्य । तेषु जुगुप्सा जाता ।

स स्वस्थस्सन्नाह – "तात, नाऽहं मिष्टकापणके कर्म करिष्ये; यत्र क्वाप्यन्यत्र करिष्यामि तावत" ।

★ ★ ★

पितरौ बालचन्द्रं सह नीत्वा कुम्भघोणं गतौ । तत्र स्वामिचरणानां सन्निधौ साष्टाङ्गं प्रणम्योत्थाय ताभ्यां इत्थं निवेदितम् ।

"स्वामिनः ! तत्र भवतां आशीर्बलेन अस्मत्कुमारः नीरोगो दृढगात्रश्च संवृत्तः" इति ।

आचार्यपादाः वात्सल्यपूर्णया वाचाऽशींषि प्रयुज्य निवर्तयामासुस्तान् ।

स इदानीं मधुरापाठशालायां व्यायामोऽपाध्यायः । स सुगात्रः, प्रियदर्शिनः, मांसलैः, वृत्तवृत्तैर्गात्रैः सुशोभितः । किं बहुना - सिंहसंहननः । विद्यार्थिनोऽपि तमत्यादरेण निरवधिकेन प्रेम्णाऽभिमानेन च पश्यन्ति । न कमपि दूषयति, न वा भीषयति सः । सर्वं स्वयं कृत्वा दर्शयति एवं कर्तव्यमिति ।

व्यसनं दूरतो वार्यं आत्मनः सुखमिच्छता ।
गुडप्रियो बालचन्द्रो व्यसनी न सुखं गतः ॥

स्वामिसन्देशवचनात स मुक्तो व्यसनादद्रुतम ।
नीरोगो दृढगात्रश्च संवृत्तः स सुखी किल ॥

# बहुव्रीहिः

## लेखकः – श्री कुण्टिमद्दि शेषशर्मा

इदमेकं वैयाकरणपारिभाषिकं पदम् । व्याकरणशास्त्रे तत्पुरुषादयस्सन्ति षट् समासाः ।

तेषां पूर्वपदार्थप्रधानः अव्ययीभावः । उपकृष्णम् – कृष्णस्य समीपे इत्यर्थः उत्तरपदार्थप्रधानस्तत्पुरुषः । राजपुरुषः – राज्ञः पुरुष इति । उभयपदार्थप्रधानः द्वन्द्वः । रामकृष्णौ – रामश्च कृष्णश्चेति । अन्यपदार्थप्रधानः बहुव्रीहिः । पीताम्बरः – पीतमम्बरं यस्य स इति ।

तत्पुरुषभेदः कर्मधारय इति । समानाधिकरणः तत्पुरुषः कर्मधारयः । नीलघटः – नीलश्चासौ घटश्च इति ।

अस्यैव संख्यापूर्वत्वे द्विगुरिति नाम – सप्तर्षय इति ।

एवं च उत्तरपदार्थप्राधान्ये तत्पुरुष इति अन्यपदार्थप्राधान्ये बहुव्रीहिरिति फलितम् ।

★ ★ ★

कदाचित् कश्चित् ब्राह्मणः स्वधीतव्याकरणशास्त्रः काकतीयप्रतापरुद्रराजमाश्रित्य भूदानमयाचत । पंडितपक्षपाती राजापि स्वकायस्थमाहूयावदत । अस्मै पण्डितशेखराय भूखण्डं दित्सामि । कञ्चन विमृश्य निर्दिश इति । स तु कायस्थः "पंडितः स्वमनाश्रित्य राजसमीपं गतवानिति" तस्मै द्विषन्, कञ्चन धन्वानं तटाकादुत्तरे वर्तमानं निर्दिदेश ।

कायस्थ कौटिल्यमजानन् राजा तन्निर्दिष्टतटाकोत्तरां भूमिं पंडिताय शासनपूर्वकम् ददौ ।

★ ★ ★

ब्राह्मणस्तत्र गत्वा यावत्पश्यति, न तत्र कृष्युपयुक्तां भूमिमपश्यत्।

"कायस्थमननुसृत्य हि सुधापि पीता विषायते नूनम्।
ईश्वरगन्त्रय्यक्षे नो धावति कलिमां विना सुमते॥"

इति विचिन्त्य, शिरश्चालयित्वा, भवतु नाम, कायस्थस्य नेत्रे उन्मीलयामीति मन्यमानः तटाकस्य दक्षिणभागे स्थितमुर्वराखण्डमाक्रम्य कृष्ट्वा सस्यानि प्रारोहयत्। तत्रत्या हलिनः कायस्थमुपेत्य पण्डिताक्रमणं न्यवेदन्।

कायस्थः राजसमीपे वृत्तं वृत्तान्तं निवेदयांबभूव। राजा पंडितमाजुहाव। तयोरेवमालापसमजनि।

राजा – हे ब्रह्मन्! कस्ते दुराक्रमः? ननु तुभ्यं दत्तो भूखण्डः तटाकोत्तरः। कुतस्त्वमन्यदीये तटाकाद्दक्षिणे प्राविशः?

ब्राह्मणः – देव, नाहमन्यक्षेत्रे प्राविशम्। तटाकोत्तर एव।

राजा – (कायस्थमालोक्य) किमेतत्? पंडित एवं वदति?

कायस्थः – अयं तटाकस्य दक्षिणे एव भूखण्डे उवाप।

पंडितः – (स्वं प्रश्नार्थकदृशा पश्यन्तं राजानमालोक्य) देव! नाहं अन्यक्षेत्रे प्राविशम्। तटाकोत्तर एव।

राजा – (आलोच्य) कथं कथम्? किं त्वया बहुव्रीहिरङ्गीकृता तटाकोत्तर इत्यस्य?

पंडितः – अथकिम्। भवता पंडिताय वितीर्णा भूमिः किमल्पव्रीहि-र्भवितुमर्हति?

राजा – (तस्य चमत्कृतिं प्रेक्ष्य) साधु साधु ! हे कायस्थ ! अस्मै नटाकोत्तरो भूखण्डः दत्तः खलु ? त्वं मनुषे नटाकादुत्तर इति । स तु नटाकः उत्तरे यस्य इति ।

उभयोरपि दोषो नास्ति । यं भूखण्डं पंडितः स्वाधीकरोति स एव तस्यास्तु ।

कायस्थः – यथाज्ञापयति देवः ।

★ ★ ★

इत्थं समासानां स्वरूपस्वभावज्ञानेन, प्रतिभाप्रभावाच्च ऊषरक्षेत्रं उर्वरी बभूव । अर्थग्रहणाय समासज्ञानमावश्यकम् ।

एतत्समाससंज्ञाः निबध्य रचितः एकः श्लोकोस्ति ।

तत्पुरुष कर्मधारय येनाहं स्यां बहुव्रीहिः ।
द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ॥

अस्य भावः –

हे पुरुष = हे भगवन् - (लोके परमात्मैव पुरुषः "स्त्रीप्रायमितरं जगत्" इत्युक्तत्वात) येन कर्मणा, अहं बहुव्रीहिः = अधिकधान्यवान्, द्वन्द्वः = जाया-द्वितीयः, द्विगुः = धेनुद्वयवान्, स्याम्, येन च कर्मणा, मद्गेहे नित्यं, अव्ययी-भावः= अक्षयः स्यात्, तत्कर्म, धारय = कुरु इति ।

अतः समासान् अर्थानुसारं योजयितुं व्युत्पत्ति रावश्यकी ।

# लेखः

**लेखकः – ल. भ. चक्रदेवः**
कल्पकः, संयोजकश्च, श्रीवत्स - बालमन्दिरम्
गिरगांव, मुम्बई - ४.

श्रीमन्तः गैर्वाणी - संपादकाः, सप्रेमादरपूर्वकं नमः ।

भवतां मम च परिचयः 1964 अब्दस्य जानेवरीमासे गाजियाबाद इत्यत्र अ. भा. संस्कृतसाहित्यसम्मेलनस्य प्रसंगे जातः ।

तस्मात कारणात् अहं पश्यामि यत् भवताम् मासिकं (यत प्रथमं त्रैमासिकं आसीत्) अतीव नियतं प्रकाश्यते । तस्य अंतरंगम् बहुसुन्दरमस्ति । सुन्दराः लेखाः तत्र प्रकाश्यन्ते । भवतां संपादकीयास्तु विचारपरिप्लुप्ताः भवन्ति । बहिरंगमपि आकर्षकम् ।

भवतां संस्कृतविषयिकी नीतिः अतीव सुस्पष्टा विद्यते या नीतिः मया 1953 वर्षे बहु विचार्य सुनिश्चिता, तस्मात् कारणात यावत शक्यं प्रचार्यते च नाम "संस्कृतमेव भारतराष्ट्रस्य स्वयंसिद्धा राष्ट्रभाषा" "अस्ति एव" न केवलम् "भवितुं अर्हति" इति । हिंदी राष्ट्रभाषा इति कथनेन न केवलं संस्कृतभाषायाः अपि तु भारतराष्ट्रस्यैव अवमानः । किं अस्माकं पञ्चसहस्रवर्षायुषः, खण्डप्रायस्य, भारतीय इति उच्चसंस्कृतियुतस्य, राष्ट्रस्य राष्ट्रभाषा सप्ताष्टशभकायुषे, प्रादेशिकी, अप्रगल्भा, विकृतिप्रधाना, केवलं लिंगद्वययुता, हिंदीनाम्नी पंगूभाषा भवितुमर्हति! कदापि न । भारतस्य राष्ट्रभाषा भारती एव । न केवलं इदं बहुमानयुतं स्थानं संस्कृतस्य, अपि तु "केन्द्रशासनभाषा" इति व्यावहारिकं स्थानमपि – "यूनियन् ऑफीशिअल लँग्वेज" इति स्थानमपि संस्कृतस्यैव यदि वयं – नाम सर्वमपि राष्ट्रम् - पूर्णांगेन स्वतन्त्राः । कापि प्रादेशिकी भाषा तत्र प्रतिष्ठापिता भवेत् नर्हि सर्वं राष्ट्रं तत्प्रदेशस्य अंकितम्" इति अर्थः समुद्भवति यद्यपि न कस्यापि परकीयराष्ट्रस्य । सा भाषा अधुना न भाष्यते इति यद्यपि सत्यं तथापि तत्सत्यं परिवर्तनीयं अस्ति । सा दैनंदिनव्यवहारार्थमपि भाषिता भाषा पुनः कर्तुं शक्यं यथा इस्त्राइलराष्ट्रेण हीब्रूभाषा कृता । इयं नीतिः भवताऽपि प्रचारयते प्रचार्यते च इति कृत्वा परमानन्दः मे मनसि जायते ।

# श्री विवेकानन्दस्तुतिः

### ले० बसवराजु० सीतारामरावः

1. श्रीरामकृष्णशिष्याख्यं नैष्ठिकब्रह्मचारिणम् ।
   विवेकानन्दयोगीन्द्रं जितेंद्रियमुपास्महे ॥

2. यस्य जिह्वासनासीना वाग्देवी तं गुरोर्गुरुम् ।
   विवेकानन्दयोगीन्द्रं जितेंद्रियमुपास्महे ॥

3. पद्मपत्रविशालाक्षं स्वशिष्यैः परिवेष्टितम् ।
   विवेकानन्दयोगीन्द्रं जितेंद्रियमुपास्महे ॥

4. मुनिं निर्वैरिणं शांतं दरिद्रजनबांधवम् ।
   विवेकानन्दयोगीन्द्रं जितेंद्रियमुपास्महे ॥

5. प्रसन्नवदनांभोजं ब्रह्मतेजोमयं गुरुम् ।
   विवेकानन्दयोगीन्द्रं जितेंद्रियमुपास्महे ॥

# लघुकथा

## श्रेष्ठिपुत्री गुरुश्च

### पैत्तंबाडि महाकवि० रामानुजाचार्यः

अकार्यं कर्म कुर्याच्चेत् अज्ञोऽपि मृतिभाग्यवेत् ।
सर्वज्ञः किं पुनर्मोहात् श्रेष्ठिपुत्र्यां गुरुर्यथा ॥

धर्मपुरनाम्नि ग्रामे नवकोटिनामा कश्चित् श्रेष्ठी उवास । तस्य एकैव पुत्री । पितरौ तां कस्यचिदुपाध्यायस्य गृहे पृथक् विद्याः ग्रहीतुं न्ययोजयत । क्रमशः तया विद्याः गृहीताः । कदाचित् सा ऋतुस्नाता पितृभ्यां विद्यागुरवे दक्षिणां दातुं नियुक्ता । दक्षिणा तांबूलफलादिभिः गुरुगृहं गत्वा यथोक्तं गुरवे समर्प्य "गच्छामि तावत्पुनस्सेवनाय" इति सा ययाचे ।

गुरुः – (एकाकिनीं तां वीक्ष्य) "अयि बाले ! त्वदालिंगनार्थमेव खलु अतिश्रमेण मया विद्याः उपदिष्टाः । तत् मैते दक्षिणादयः इति उदतिष्ठत् ।

बाला – गुरो, स्वपुत्रीनिर्विशेषेयं नोचितैवं इत्यर्थोक्ते स्वकरग्रहणार्थं समीपमागतं गुरुं वीक्ष्य भीतभीता सत्वरं यथागतं निष्क्रान्ता ।

गुरुः – (आग्रहं कृत्वा सत्वरं श्रेष्ठिसमीपं गत्वा) भवत्पुत्रीमुखात् तदृतुजननकालो ज्ञातः, तत्फलं तु अचिरादेव भवज्जीवितान्तकरं भविष्यति इत्यवदत् ।

श्रेष्ठी – स दोषः कथं परिहर्तव्यः ?

गुरुः – यदि भवतां जीविताशा, यदि च सुपुत्रावाप्त्याशा तर्हि सद्यः पुत्र्या सह वर्तने प्रीतिः त्यक्तव्या । यत्र कुत्र वा त्वया अज्ञाता जीवन्ती वर्तताम् सा ।

श्रेष्ठी – तदर्थं कश्चित् उपायः उच्यताम्।

गुरुः – पुत्रीं पेटिकायां निक्षिप्य अस्मन्नदीप्रवाहे त्यज। यत्र कुत्रापि सा अज्ञाता जीवतु।

श्रेष्ठी – युक्तमुक्तं गुरुणा। यतः मम जीविते सुपुत्रोत्पत्तिश्च भविष्यति। इति तथा अकरोत्।

गुरुः – (सहर्षं, स्वगृहं गत्वा स्रक्चन्दनाद्यलंकृतः। तन्नदीमार्गस्थपञ्च-योजनविस्तीर्णमहारण्यस्य अनन्तरं तन्नदीतटे तत्पेटिकाप्रतीक्षकः कस्मिंश्चित् तिरोहितप्रदेशे अतिष्ठत।

तदा तदरण्ये मृगयार्थमटन् कश्चित् राजकुमारः अतिपिपासया आर्दितः तन्नदीं गतः। समीपं आगतां पेटिकां दृष्ट्वा तां आकृष्य उद्घाट्य च तदन्तस्थां कमनीयरूपिणीं श्रेष्ठिपुत्रीं बहिरानीय तद्वृत्तान्तं विदित्वा तत्पेटिकायां एकं क्षुधितं व्याघ्रबालं निक्षिप्य प्रवाहे विहाय तां सुन्दरीं स्वान्दोलिकां आरोप्य स्वनगरं जगाम।

तत्पेटिकाप्रतीक्षको गुरुस्तु यावत् प्रवाहनीतां पेटिकां सानन्दं उद्घाटितवान् तावत् व्याघ्रेण मारितः॥

# अपराधदूरीकरणम्

लेखकः – "साहित्यभूषणम्" पण्डाल० ब्रह्मारेड्डिः
कोंकुदुरु, पूर्वगोदावरि जिला.

कलिंगेषु ललितपुरं इत्याख्यया ख्यातायां राजधान्यां धर्मरक्षको नाम कलिं नृपवरो निवसति स्म। सः अतीव धार्मिकः दयालुश्च राज्यपालकः आसीत। तस्मिन् राज्ये बहवः जनाः परिश्रमं कुर्वन्तो धनधान्यसम्पन्नाश्चासन्। कतिपयप्रजास्तु परिश्रमविरता चौर्यादिकं विधाय स्वजीवनं यापयन्ति स्म। प्रकाशपरिपूर्णदिनसमयेऽपि दुष्टाः सम्पन्नानां गृहेषु प्रविश्य जनानां समक्षमेव निर्भयं चौर्यं कुर्वन्ति स्म। अतः यः अद्य बहुसंपन्नः अस्ति, स एव श्वः अपहारितद्रव्यो भिक्षुको भूत्वा अटति स्म। अस्मिन् दिने दृष्टो जनः अन्येद्युः न दृश्यते स्म। तस्मिन् राज़्ये अपराधाधिक्यं सर्वत्र प्रचलितमासीत्। चौर्यहत्या-काण्डोत्कोचग्रहणाद्यभियोगाः प्रत्यहं राज्ञः समक्षं उपस्थिताः क्रियन्ते स्म। धर्म-रक्षको दयालुत्वात् मानवहन्तकायापि द्विचतुरवर्षाणां कारावासदण्डं ददन्नासीत। दिने दिने प्रवर्धमानानपराधान् शृण्वन् राजा भृशं दुःखितान्तरङ्गः अभवत्। धर्मरक्षकोऽपराधान्नीकर्तुमुपायान् आलोचयामास।

सर्वे धनिकाः चौरेभ्यो दुष्टेभ्यश्च बिभ्यति स्म। धनिकानां निरपराधिनां सज्जनानाञ्च हत्याः प्रभूततया भवन्ति स्म। यः दुरात्मा एकवारं चौर्यं हत्यां वा कृत्वा कारावासे निक्षिप्तः, सोऽपि सर्वकारेण विमुक्तः सन् भूयोभूयः निन्दार्हां आत्मनः वृत्तिं न त्यजति स्म। मानवमारणमपि प्रत्यक्षमेव क्रियते स्म। अतः प्रजाः भृशमसन्तुष्टाः संजाता आसन्। गणनायां कृतायां एकस्मिन्नेव संवत्सरे तस्मिन् राज्ये लक्षमानवानां हत्याः पञ्चकोटिचौर्योत्कोचग्रहणाद्यपराधाश्च घटिताः।

अतः चिन्ताकुलो धर्मरक्षकः उपस्थितसर्वसभ्यायां सभायामवदत्– "राज्ये दिने दिने प्रवर्धमानैरपराधैरहं भृशं खिन्नान्तःकरणो भवामि। निरपराधिनां मानवानां हत्यामवलोक्य तु मम दयापूर्णं मनः शतधा भिद्यते। प्रजानां चासन्तोषो वर्धते। एतन्निवारणार्थं किं करणीयमस्माभिर्वा कथ्यताम्।"

कश्चित बुद्धिमान् नाम सचिवः उत्थाय अभाषत सादरम्– "अपराधिभ्यो भोजनादिकमुदरपूरं दीयते; ततः ते स्वगृहनिर्विशेषं कारावासे जीवन्ति। अतः यदि अल्पपरिमितं भोजनादिकं तेभ्यो दीयते, तदा कारावासदुःखात् त्रस्ता दुष्टाः चौर्योत्कोचग्रहणादिदुष्कार्याणि न करिष्यन्तीति सम्भाव्यते। तेषामाहारार्थन्तु व्यर्थं प्रभूततया व्ययश्च भवत्यतोऽपराधिभिः किंचित्कर्म कारयितव्यम्। अनेन राज्यस्याधिको व्ययो व्यर्थः न भवेत। यतः यः आयः प्राप्स्यते, तं एव तेभ्यो व्ययितुं पारयामः। अपि च तेषु तेषु कर्मसु कुशला भूत्वा दण्डसमाप्त्यनन्तरं विमुक्तास्ते स्वजीविकानिर्वहणार्थं द्रव्यमार्जयितुं शक्नुवन्ति। एवं कृते अपराधिनां संख्या क्षीणा भविष्यतीति मे मतिः।"

कश्चिदन्यो बुद्धिसागर इति विख्यातोऽमात्यः सविनयमेवमवदत – "इदानीमस्माकं राज्ये मरणदण्डः कस्मैचिपि न दीयते। अत एव दिने दिने मानवानां हत्या अधिकतया भवन्ति। ततो हन्तकेभ्यो मृत्युदण्डः द्वीपान्तरवासदण्डो वा देयः। यदेत्थं क्रियते, तदावश्यं हन्तकानां संख्या क्षीणा भवेत। अन्यापराधिनां विषये बुद्धिमद्भिरमात्यैर्यदुक्तं तदनुष्ठीयताम्।"

राजा तत्रत्याः सभ्याश्च तां सूचनामङ्गीकुर्वन्।

परेद्युः राजा राज्ये सर्वत्र घोषयामास यद् यः मानवहत्यां कुर्यात, तस्मै पर्याप्तकारणेषु सत्सु मृत्युदण्डो दीयते; अन्यथा आजीवनकारावासदण्डः। किञ्च यः चौर्योत्कोचग्रहणापराधं कुर्यात, दुष्टाय तस्मै पूर्वतोधिककालपर्यन्तं कारावासदण्डो दीयते इति। एतत्परिवर्तितदण्डविधानश्रवणात् दुष्टा अन्यायिनश्च हत्या-चौर्योत्कोचग्रहणाद्यपराधकरणाद् अबिभियुः। परमाल्पेनैव समयेन भूयो हत्या-चौर्योत्कोचग्रहणाद्यपराधिनां संख्या प्रथममिव वर्धितुमारभन।

ततः चिन्ताक्रान्तेन धर्मरक्षकेन पुनः एका सभा आहूता। सभायां पंडितम्मान्याः चतुराश्च स्वाभिप्रायान् प्रकटीचक्रुः।

अन्ततः धर्मरक्षकस्य सुपुत्रः अपराधनिवारणेच्छुको न्यायवर्धनः उत्थाय सविनयमित्थं व्यज्ञापयत्। "यद्यप्यहं वयसा कनिष्ठः तथापि हत्याद्यपराधान्

द्रष्टुमपारयन् किञ्चित् निवेदयितुमिच्छामि। यदा कस्यचिन् मानवस्य हत्या-समाचारमाकर्णयामि, तदाऽहं अकथनीयदुःखसागरे भृशं निमग्नो भवामि। सर्व-प्राणिषु उत्तमानां मानवानामेव दयनीयरीत्या मारणं क्रियते, तदपेक्षयाऽधिकं करुणाजनकं लज्जोत्पादकञ्च किं स्यात्? – इत्थमाशापरिपूरितमानसो मानवो दुष्टजनैः शत्रूणामसह्यरूपेण पीड्यते हन्यते च। हत्यानां दूरीकरणार्थं केवलं एक एव मार्गः। यः मानवहत्यां कुर्यात, तस्य क्रूरं चित्रवधं आज्ञापयेत्। अर्थात् द्विचतुरदिनपर्यन्तं मानवहन्तकस्य अङ्गप्रत्यङ्गानि एकैकशः खण्डयेत, येन बहु-पीड्यमानो हन्तकः आत्मना मारितमेव मानवं धन्यं मन्येत। करुणारहितहृदयोऽहमिति भवद्भिर्न मन्तव्यम्। मानवहत्यां द्रष्टुमसहमानेन करुणार्द्रचित्तेन मया तथा स्वोद्देश्यः प्रकटीक्रियते। इत्थं दुरात्मनां समक्षं पञ्चषहन्तकानां चित्रवधे कृते सत्येव सर्वे दुरात्मनः मनुष्याणां हत्यां मुञ्चेयुः। अभूतपूर्वकठोरतमदण्डभिया विरमन्ति च हत्याकर्तारः। पञ्चषदुष्टानां चित्रवधात् लक्षशः मानवानां हत्यायाः संरक्षणं धर्मदृष्ट्या सामाजिकदृष्ट्या च उत्तममेव भवेत्। तदैव वस्तुतः वयं परम-दयालवः भवेम, नान्यथा। साधारणचौर्योत्कोचग्रहणाद्यपराधिभ्योऽपि पञ्चवर्ष-प्रभृति दशवर्षपर्यन्तं अर्थात् कठोरःदण्डः प्रदेयः। पूर्वमिव कारावासे तैरादायकं कर्म कारयेत, तथा तेभ्यो भोजनादिकमप्यपर्याप्तं दद्यात्। तदा तु कठोरदण्डभिया चौर्योत्कोचग्रहणाद्यन्यायकर्मकारणात् सद्य एव प्रजाः विरमेयुः। परन्तु दण्ड-प्रदानात्पूर्वं बहुसमयपर्यन्तं तर्कवितर्कादिप्रमाणैरिदं सम्यग्ज्ञातव्यं यद् वास्तविकाप-राधिने एव दण्डो दीयते, आहोस्वित प्रमादवशात् कश्चिन् निरपराधी अपराधित्वेन गृहीतः किं वेति। चौर्योत्कोचग्रहणाद्यपराधदूरीकरणाय अस्माभिरिदमप्यवश्यं कर्तव्यं यत् सर्वेभ्यो जनेभ्यः स्वजीविकोपार्जनार्थं पर्याप्तमायदायकं कर्म देयं। किञ्च ये कस्मिंश्चित कार्ये नितान्तमसमर्थाः (रोगिणः इत्यादयः) स्युः, तेभ्यस्तु आवश्यकमन्नवस्त्रादिकं राज्ञा सकरुणं प्रदेयं भवेत्। असमर्थेभ्यो भोजनादिक-प्रदानाञ्च व्यर्थो व्ययो भवेदिति न मन्तव्यम्। कुत इति चेत् चौर्योत्कोचग्रहणादि-अपराधनिवारणाय स्थापितेषु अभियोगविभागेषु यद् द्रव्यमिदानीं व्ययितं भवति, तदा ततोऽप्यधिकतया व्ययो न भवेत्। किञ्च भारतीय - संस्कृतिधर्मप्रचारार्थन्तु धार्मिकनैतिकादिग्रन्थरत्नानां पठनं पाठनं च सर्वत्र प्रचारयितुमपि प्रयत्नं कुर्यात्,

यतः बाल्यात् प्रभृति बालकाः स्वस्वधर्मे निरता भवेयुः । तदैव न्यायसंरक्षणं भवेदिति मन्ये । ”

यावन् न्यायवर्धनस्य उत्तमोत्तमां सम्मतिमशृण्वन् तावत् सर्वे जना उच्चैरवदन् यद् राजकुमारेण न्यायवर्धनेनाल्पवयस्केनापि यदुक्तं तत्सर्वमपराध-दूरीकरणाय भृशमुपकरिष्यतीति ।

यदा भूपालो धर्मरक्षको हन्तकेभ्यः कठिनतमचित्रवधदण्डश्चापराधिभ्योऽतिकठिनदण्डं दातुमारभत, तदाप्रभृति अपराधिनां संख्या क्षीणा अभवत् । प्रथमतस्तु जनानां दुष्टानां च समक्षं पंचषमानवहन्तकानां चित्रवधः द्विशतापराधिनां कारावासदण्डश्चातीव क्रूरतयाऽऽसीत् । किन्तु मासचतुष्टये व्यतीते कश्चिन् मानवहन्तकोऽपराधी वा प्रयत्ने कृतेऽपि द्रष्टुमलब्ध आसीत । यद्यपि प्रजाः स्वगृहकवाटानि उद्घाट्यैव बहिर्गच्छन्ति स्म, तथापि चौर्यं न भवति स्म । अरण्येऽपि आत्मनः शत्रुं सुवर्णभूषणधारिणं वा हन्तुं कश्चिन् नासीत समर्थः । सज्जना दुष्टाश्च स्वपरिश्रमोपार्जितेनैव सुखं जीवन्ति स्म । बालबालिका अपि धार्मिकनैतिकग्रन्थपठनात् अन्याये कुमार्गे वा कदापि पदं नार्पयन् । दया, न्याय, सहयोगादिगुणा जन्मतो लब्धाभ्यासा इव संवृत्ताः । सर्वे जनाः सुखिनः अभवन् ।

# अशोकः

## लेखकः – समुद्राल० लक्ष्मणः

दिल्लीनगरस्थ समीपप्रदेशे मार्चमासे 28 तिथौ (1966) ब्राह्मीलिपि-निबद्धं प्राकृतमयमेकं अशोकस्य शासनं नूतनतयोपलब्धमिति ज्ञात्वा सर्वोऽपि चरित्रे बद्धश्रद्धो जनः अमन्दमानन्दं लेभे । एतस्य शासनस्योपलब्ध्या अशोकस्य कालेऽपि दिल्लीनगरं प्राशस्तमासीदिति, मौर्यचक्रवर्तिनामधिकारः तत्रापि अनुपहत एव बभूवेति च स्पष्टं भवति । अपि च तच्छासनं प्रथितचरितस्य तत्रभवतोऽशोकस्य माहात्म्यं प्रपञ्चजनानां पुरतः पुनरपि एकवारमुद्भावयति । ततश्च एतं सन्दर्भं पुरस्कृत्य अनुपमकीर्तेस्तस्य चक्रवर्तिनः चरितस्य स्मरणं समुचितं मन्ये ।

न केवलं भारतचरित्रे परन्तु सर्वस्मिन्नपि प्रपञ्चचरित्रे अशोकसदृशो धार्मिको नरपतिरन्यो नोपलभ्यते इति सर्वेऽपि चरित्रकाराः मुक्तकण्ठमङ्गीकुर्वन्ति । अलेग्जान्डर, सीसर, नेपोलियन् इत्येतदादयः अनेके चरित्रप्रसिद्धाः महावीराश्च पुरुषा वर्तन्ते । किन्तु तेषु लुप्तः कोऽपि विशेषः अशोके आसीत्, येन तस्य कीर्तिश्रीः निरुपमेति ख्यातिं भेजे । राजत्वं धार्मिकत्वं चेत्येतद्द्वयमपि सम्मिलितं सत् अशोकरूपेणावततारेति प्रसिद्धलेखकास्तं राजानं प्रशशंसुः । एतादृशस्य महापुरुषस्य जननी भारतमाता धन्येति न खलु विशिष्य वक्तव्यम् ।

अशोकः मौर्यचन्द्रगुप्तस्य (मुद्राराक्षसनाटके प्रस्तुतस्य) पौत्रः, अमित्रघातबिरुदाङ्कितस्य बिन्दुसारस्य पुत्रश्चासीत् । क्रीस्तोः पूर्वं २७४ वत्सरे सिंहासनमधिरुह्य २३४ वत्सरपर्यन्तं राज्यं शशासेति चरित्रपरिशीलनात्प्रतीयते । पाटलीपुत्रं मौर्याणां राजधानीति तावत्प्रसिद्धमेव । पराक्रमसम्पन्नः अशोकः राज्यविस्तरणकांक्षया २६१ (क्री. पू.) वत्सरे महाभीषणं समरं कृत्वा कलिङ्गान् जिगाय । युद्धे लक्षशः प्रजाः निहताः, ततोऽपि अधिकसंख्याकाः विकलांगाश्च सञ्जाताः । इष्टजनवियोगार्दितानां जनानामार्तनादैः अन्तरिक्षमापूर्णं बभूव । धर्ममार्गानुयायिनो ब्राह्मणाः श्रमणाश्च महतीं विपत्तिमापुः । युद्धस्य तादृशं घोरं परिणामं विलोक्य विजेतुः चित्तं प्रगाढं पश्चात्तापमभजयत् । तत आरभ्य स राजा सर्वात्मना युद्धात् विरराम । दिग्विजयं परित्यज्य धर्मविजयं परिजग्राह । भेरीघोषं तिरस्कृत्य

धर्मघोषं स्वीचकार । एवं च कालाशोक इति ततः पूर्वं विदितः स राजा कलिङ्ग-युद्धानन्तरं धर्माशोक इति प्रशस्ति प्राप। तस्मात् तत् युद्धमेव तस्य महानुभावताया हेतुरिति वक्तुं शक्यम् ।

अशोकः युद्धं सर्वात्मना त्यक्त्वा उपगुप्ताख्यस्य कस्यचित् बौद्धधर्मानुयायिनः उपदेशं शिरसि धृत्वा शाक्योपासकः संवृत्तः । अथ सार्धवत्सरद्वयानन्तरं स्वयं भिक्षुः समजायतेति च ज्ञायते । (अयं विषयः दिल्लीशासनेऽपि प्रस्तुतोऽस्ति ।) ततः प्रभृति सः बौद्धधर्मप्रचारार्थं महान्तमुद्यममन्वतिष्ठत । स्वयं बौद्धधर्ममनुसरन्नपि क्षमाशीलः स नराधिपः सर्वाभिरेव प्रजाभिः बौद्धधर्मोऽवलम्बनीय इति परं दुराग्रहं न प्रदर्शितवान् । बुद्धे धर्मे सङ्घे च स्वकीयं प्रत्ययं शासनद्वारा प्रकटीचकार। प्रसिद्धानि लुम्बिनीवनादीनि बौद्धपुण्यक्षेत्राणि गत्वा तत्र धर्मप्रख्यापकानि प्राकृत-भाषानिबद्धानि बहूनि शासनफलकानि स्थापयामास । हिंसात्मकं मांसभक्षणं स्वयं विसृज्य तथा कुरुतेति प्रजाः प्राबोधयत् ।

विवाहादिशुभकार्येषु अनावश्यकतया धनव्ययो न कर्तव्य इति, परिजनेषु कारुण्यं, गुरुजनेषु गौरवं च प्रदर्शनीयमिति, ब्राह्मणेभ्यः श्रमणेभ्यश्च यथाशक्ति यत्किञ्चिद्देयमिति, प्राणिषु हिंसा परिहरणीयेति च बहूनि "धर्ममङ्गलानि" बोधयामास । शुश्रूषा, अपचितिः, सम्प्रतिपत्तिः, दानम्, अहिंसा, दया, सत्यम्, शौचम्, मार्दवम्, साधुता, संयमः, कृतज्ञता, धर्मरतिः, इत्येतदादीन् बहून् धर्मान् शिलातलेषु, शासनस्तम्भेषु च निबद्धान् कृत्वा चतसृष्वपि दिक्षु प्रत्यतिष्ठत् ।

अपि च परमतसहनप्रधानस्य विश्वात्मकधर्मस्य विस्तृतप्रचारार्थं विशिष्य कांश्चिदमात्यान् नियम्य स्वदेशे विदेशेषु च तद्धर्मव्याप्तये प्रकृष्टमुद्योग-मनुष्ठितवान् । तस्य महेन्द्राख्यः पुत्रः सङ्घानाम्नी पुत्री च बौद्धधर्मप्रचारार्थं सिंहलद्वीपं जग्मतुरिति ज्ञायते । बौद्धधर्मानुसारिणां भिक्षूणां मध्ये ऐकमत्य-परिरक्षणार्थमपि कृतमतिरशोकः आसीत् । तत एव तेन तृतीयो बौद्धसंघसमवायो निर्व्यूढ इति कथ्यते ।

अशोकः धर्मप्रचारणे इव सदाचरणेऽपि बद्धदीक्षो बभूव । सः ब्राह्मणेभ्यः श्रमणेभ्यश्च प्रभूतानि धनानि ददौ । न केवलं मनुजेभ्यः, परन्तु पशुभ्योऽपि

वैद्यालयान्निर्मितवान् । मार्गेषु तत्र तत्र कूपानां खननेन, छायातरूणां पोषणेन, विश्रान्तिगृहाणां निर्माणेन च तैर्थिकानां यात्रां सुखमयीमतनोत् । स्वयं राष्ट्रे सर्वत्र पुनः पुनरटित्वा अविनीतिलेशमपि परिपालने यत्र कुत्रचित् दृष्टमपनिनाय ।

"प्रजानां विनयाधानात् रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ " इति ॥

यदुक्तं कविकुलगुरुणा कालिदासेन तत्सर्वथाऽशोकस्य विषये सार्थकं विभाव्यते । तथाहि । स महात्मा कलिंगशिलाफलके "सर्वोऽपि प्रजानीकः मम सन्ततिः । यथा वाऽहं मम सन्ततेरिह लोके परलोके च सुखं भवतु इति इच्छामि, तथैव सर्वे जनाः सुखिनो भवन्तु इत्यपि इच्छामि इति प्रकटयामास । सर्वेषु कालेषु सर्वासु चावस्थासु स्वकर्तव्यनिर्वहणे निमग्नः सन् स्वं प्रथमं प्रजासेवकं मन्यते स्म । ताः किल प्रजाः धन्याः यासां तादृशो धार्मिकः पुरुषः राजा बभूव ।

निर्माणात्मककार्यक्रमेष्वपि अशोकः जागरूक एवेति प्रतीयते । काश्मीरेषु श्रीनगरं नेपालेषु देवपत्तनं च तन्निर्मिते । शतशः विहितं स्थूपानां विहाराणां च निर्माणं तत्कर्तृकं वदन्ति चारित्रकाः । तस्मिन् काले शिलास्तम्भाः तथा स्निग्धीकृताः, यथा ते प्रेक्षकाणामधुनापि लोहभ्रान्तिं जनयन्ति । तदुपरि उत्कीर्णं शिल्पमपि धर्मचक्रमस्माकमद्य जातीयं चिह्नं भवति किल ।

अशोकस्यास्तमयानन्तरं सुविशालस्य तत्साम्राज्यस्य रक्षणार्थं तादृशस्य समर्थस्य राज्ञः अन्यस्याभावात्, प्रादेशिकपालकानां वैरूप्याच्च तद्राज्यं शतशः भिन्नमभूत् । बौद्धमतद्वेषिणां ब्राह्मणानां प्रातिकूल्यमपि तद्विनाशस्य कारणमिति केचित कथयन्ति ।

अण्वायुधभीतिग्रस्तमशांतिविधानं वर्गकलहावृतं च जगदिदमैक्यराज्य-समितिद्वारा यं धर्ममनुसर्तुमद्य यतते, तस्य विश्वात्मकस्य धर्मस्य प्रथमप्रचारकः अशोकः प्रश्नचरित्रेऽजरोऽमरश्च प्रतिभाति ।

॥ अशोकसदृशो राजा न भूतो न भविष्यति ॥

# अलङ्कारशास्त्रम्

## रचयिता – माचिराजु शिवरामराजः

प्रियविद्यार्थिनः !

अलंकारो नाम कः ? शास्त्रं नाम किम् ? साहित्ये काव्ये च शास्त्रस्य कीदृशं स्थानम् ? अलङ्कारशास्त्रेण को वा लाभः ? तत् कुतः अध्येयम् ? इति सन्देहाः तदा तदा सर्वेषां उद्भवन्ति । तत् दिङ्मात्रं तत्स्वरूपं जानीमः ।

"सौन्दर्यमलङ्कारः" इति तत्रभवानाचार्यवामनो वदति । तस्य व्युत्पत्तिः द्विधा प्रदर्श्यते विद्वद्भिः । प्रथमा यथा – अलंकृतिरलंकार इति । शोभाधायक इत्यर्थः । प्रधानतोऽलंकारशास्त्राणि प्रायशः काव्यसामग्रीमेव निरूपयन्तीति स्पष्टमेव । तथा च – काव्यानां यत् यत् शोभाधायकं तत्तत् सर्वमपि अलंकार-शब्दवाच्यं भवति । अलंकारशास्त्रेषु नायकनायिकास्वरूपस्वभावनिरूपणम्, रीति-शय्यापाकगुणदोषरसादिनिरूपणम्, इत्यादि सर्वापि काव्यसामग्री सुव्यक्तीक्रियते । तत्सर्वमपि वस्तु काव्यस्य शोभाकरमेव । अतः तानि सर्वाण्यपि अलंकारशब्द-वाच्यानि भवन्ति । तदेव तच्छास्त्रस्य "अलंकारशास्त्र"मिति नाम सार्थकं भवति । नो चेत् तदन्वर्थतैव भग्ना । तर्हि कथं उपमादय एव अलंकारा इति व्यवहारः ? तद्द्वितीयव्युत्पत्त्या साध्यते । सा यथा – "अलंक्रियते अनेन इत्यलङ्कारः" इति तत्र करणव्युत्पत्तिः । शोभाऽऽधीयते अनेन उपमादिना इत्यर्थः । अत्रार्थः रूढः यथा जले बहुषु प्राणिषु उद्भवत्सु अपि "जलज" मिति पद्मस्यैव नाम तथा अलङ्कार-शब्दवाच्येषु बहुषु सत्स्वपि उपमादेरेव तन्नाम आगतम् । प्रथमव्युत्पत्त्यामर्थः यौगिकः, यथा अब्जशब्देन पद्मवाचिना चन्द्राद्यपि स्वीक्रियते । एवं च शोभाधायकः सौन्दर्योपादकश्चालङ्कार इति व्यक्तव्यम् । सः अलङ्कारशास्त्रनामान्वर्थतासाधने यौगिकः । उपमादिषु रूढः ।

शास्त्रं नाम किम् ? शास्तीति शास्त्रम् ।

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
येनोपदिश्यते सत्यं तच्छास्त्रमभिधीयते ॥ "

इति च प्रोक्तम् । यथा राजा शासनेन प्रजाः धर्ममार्गे चालयति, तथैव शास्त्रमपि स्वोक्तविषयरूपशासनेन साहितीं आनन्दमार्गे चालयति । तथा च जन्तूपकाराय आनन्दाय च प्रवृत्तानि शास्त्राणि । "बहुविधव्यक्तिस्वैरव्यवहारैः भाषायां बहुधा परिणतिः भूत्वा सा दुरधिगमार्था माभूत्" इति धिया भाषां यावच्छक्ति-सर्वसम्मतरीत्या नियन्तुं (स्थिरीकर्तुं) व्याकरणशास्त्रं प्रवृत्तम् ।" भाषायां श्रवणमात्रेणापि आनन्दानुभूतिः स्यात्" इति धिया सङ्गीतशास्त्रं, छन्दःशास्त्र च प्रवृत्तम् । "भूतभविष्यद्वर्तमानघटनाज्ञानेन अनिष्टपरिहाराय प्रयत्य सुखी भूयात् नरः" इति धिया ज्यौतिषिकशास्त्र प्रवृत्तम् । निरन्तरनिःशंकवाग्धाराप्राप्त्यै कुशाग्रबुद्धिसम्पादनाय च तर्कशास्त्रम् , "आध्यात्मिकविद्याज्ञानेन मोक्षप्राप्तिः समेभ्योऽस्तु" इति धिषणया च वेदान्तशास्त्रम । एवमेव अनेकानि शास्त्राणि महर्षिमहानुभावकृतानि "स्वस्ति प्रजाभ्यः" इति घोषयन्ति । तथैवालंकारशास्त्र-मपि ।

प्रायशः इदं वेदपुराणकाव्यात्मके साहित्ये अत्युत्कृष्टकाव्यसाहित्यस्यावश्यकीं सामग्रीं निरूपयति । दोषपरिहारगुणाधानालंकारोपादानादिभिः काव्यसौन्दर्यं एधते इति सम्यक् निरूपयति । तत्कुतः अध्येयमिति किंचित् विमृशामः ।

प्रायः काव्यविषयस्वरूपनिरूपकमिदमलङ्कारशास्त्रमिति प्रागुक्तम् । तत् काव्यस्य वाङ्मये कीदृशं स्थानमिति, तत्प्रयोजनं किमिति युष्माकं सुज्ञातमेव । तत्काव्यकर्ता च कविः । स कविः लोकव्यवहारदक्षः प्रतिभावान् , सर्वशास्त्रपंडितः, उक्तिवैचित्र्यवर्णनानिपुणश्च स्यात् । काव्यं च प्रधानतः "व्यवहारविदे" "सद्यः परनिर्वृतये" च निर्दिष्टम् ।

तादृशः सर्वज्ञः कविः स्वाभिप्रायान् सन्देशांश्च तत्र तत्र उक्तिवैचित्रीभिः बह्वीभिः ख्यापयति । एकत्र साक्षात्, अपरत्र ध्वनिना, अन्यत्र च व्यंग्यरूपेण इत्येवं बहुधा प्रकाशयति । तान् कवेरभिप्रायान् ज्ञातुं तच्चमत्कारे वैचित्र्यस्वभाव-सुज्ञानमावश्यकम् । किञ्च काव्ये गुणाः दोषाश्च स्युः । तान् ज्ञात्वैव याथार्थ्यं ज्ञातव्यम् । तथा च तत्र भवान् आचार्यदण्डी वदति –

"गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु" ॥ इति

हितोपदेशे चोक्तं किल –

"सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः" । इति

तथा चाचार्यवामनः –

"सः (अलङ्कारः अर्थात् काव्यसौन्दर्यम्) दोषगुणालंकारहानादानाभ्याम्"
"ते (दोषगुणालंकारहानादाने) शास्त्रतः" इति आह ।

एवं च काव्यस्वभावस्वरूपप्रतिपत्त्यै, कविभावज्ञानाय, तस्मादानन्दानुभूत्यै च तत्सर्वस्वरूपप्रतिपादकमलङ्कारशास्त्रं अवश्यमध्येयम् ।

लोके च अनवगम्यमानविषयाणामवगमाय अन्यवस्तुना साम्यमुच्यते विष्णुः कथमस्तीति चेत् नीलमेघ इवेत्यादि । स एव किलालंकारः । एकं वस्तु दृष्ट्वा "इदं वस्तु तदिव भाति" इत्याद्युच्यते । सोऽप्यलंकार एव । एवं च लोकेऽपि पदे पदे अज्ञातरूपेण अलंकारशास्त्रं सञ्चलति इति स्पष्टम् । अस्तु ।

"काव्यविद्या श्रुतिगता स्यान्मृतस्यापि जीवनी"; "संसार विषवृक्षस्य द्वे फले हि अमृतोपमे । काव्यामृतरसास्वादः सल्लापः सज्जनैस्सह" इति प्रोक्तत्वात् आनन्दरसानुभूत्यै यथार्थज्ञानपूर्वकं काव्यपठनम्, तस्मै च अलंकारशास्त्रं च सम्यगध्येतव्यमस्माभिः ।

# श्री कूडलि शृङ्गेरि जगद्गुरु श्री सच्चिदानन्दभारतीस्वामिनां चित्तूरु निवासः

श्रीस्वामिपादाः अत्रागत्य चातुर्मास्य दीक्षया अत्र नगरे निवसन्ति। प्रतिदिनं श्रीकन्यकापरमेश्वरीदेवस्थाने प्रातः सूत्रभाष्यप्रवचनं पूजादिकं च महावैभवेन प्रचलति। प्रतिसायं च श्रीरामविलाससभायां च उपनिषदाद्युपन्यासाः अविरतं प्रवर्तन्ते। भक्ताश्च असंख्याकाः तत्तदवकाशेषु उपस्थाय आनन्दपरवशा भवन्ति।

एतत्संदर्भे 21—7—1966 तारिकायां सायं श्रीस्वामिनः संस्कृतभाषाप्रचारिणीं सभां आत्मपादस्पर्शेनान्वगृह्णन्।

सभ्याः वेदघोषसहितेन महितेन पूर्णकुम्भेन स्वामिपादेभ्यः स्वागतमारचयन्। निधिमंत्रिणा श्री अ. वरदराजमहोदयेन प्रार्थनमाचरितम्। प्रधानमन्त्रिणा तिरुवेंकटाचार्येण स्वागतांजलिः समर्पितः, यः पृथगत्रैव सम्मुद्रितः।

वत्सलाः स्वामिपादाश्च परितुष्टाः आशिषमन्वगृह्णन्। प्रथमतः संस्कृते तदनन्तरं च आन्ध्रवाण्यां भाषमाणाः ते अवोचन् —

संस्कृतमेव प्राचीनजगद्भाषा। तदन्याश्च भाषाः तद्विकृतय एव। एकोपि संस्कृतशब्दः सुष्टु ज्ञातः प्रयुक्तश्च स्वर्गलोके सौख्यमावहति, किमुत सैव भाषा भाषिना? पाश्चात्या भारतीयनागरिकतामूलच्छेदाय उपायमालोच्यैव संस्कृतस्थाने आंग्लमारोपितवन्तः। तत्संकल्पानुगुणमेव दृढमूला आंग्ली संस्कृतं अद्यापि असस्यप्ररोहाः सस्यमिव क्षपयति।

तथापि संस्कृतं सदा अमृतभाषैव वर्तते । कोपि विद्वान् व्याजहार यावन्न वेदाः वर्तन्ते, यावत् रामायणमहाभारतादिकं प्रचार्यते, यावच्च कालिदासादि-काव्यानि श्रूयन्ते तावच्च संस्कृतं जीवत्येवेति ।

एतादृशेपि संकटकाले संस्कृतभाषाप्रचारिसभासदृश्यः संस्थाः स्वच्छन्दं तत्प्रचारं कुर्वन्तीति, तत्प्रोत्साहिताः असंख्याकाश्च संस्कृतभाषामभ्यस्यन्तीति चैतत् तद्भाषायाः चैतन्यस्य प्रभाव एव ।

एतत्सभायाः सुसंकल्पं भवनं प्रचाररीतिं च दृष्ट्वा अतीव सन्तुष्टाः स्मः ।

सर्वे च एतत्प्रचारकान् सहकृत्य महान्तं लाभं प्राप्नुयुरिति नारायणस्मृतिः ।

वाणीं भजत गैर्वाणीम्

ॐ श्री गुरुभ्यो नमः

## सभया समर्पितः स्वगताञ्जलिः

श्रीमत्परमहंसपरिव्राजकाचार्य पदवाक्यप्रमाणपारावारपारीणयमनियमासनप्राणायाम-
प्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्री
शङ्कराचार्य गुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर
सकलवेदार्थप्रकाशक सांख्यत्रयीप्रतिपादक सकलनिगमागमसारहृदय
वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानी विद्यानगरमहा
राजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराज-
गुरुभूमंडलाचार्य तुङ्गभद्रातीरवास ऋष्यश्रृङ्गपुरवराधीश्वर
शृङ्गेरि श्रीविद्याशङ्करदेव दिव्यश्रीपादपद्माराधक
कूडलि शृङ्गेरि श्रीमज्जगद्गुरु श्रीविद्याभिनव-
वालुकेश्वरभारतीस्वामिनां करकमलसञ्जात

### श्रीकूडलि शृङ्गेरि जगद्गुरु श्रीसच्चिदानन्दशङ्करभारतीस्वामिभ्यः

## संस्कृतभाषाप्रचारिण्या सभया

# सप्रश्रयं समर्पितः स्वागताञ्जलिः

—:o:—

जगद्गुरुपुङ्गवाः,

साक्षात्कृतात्मतत्त्वानां लोकोद्धरणमात्रगृहीतयात्राश्रमाणां वर्णाश्रम-
धर्मसंस्थापननिरतानां वैदिकमतसंरक्षणदीक्षितानां यदृच्छया चित्पुरमनुगृह्य
इमां संस्कृतभाषाप्रचारिणीं सभामपि आत्मपादस्पर्शेन पावितवतां तत्रभवतां
भवतां अयमस्माकं स्वागताञ्जलिः ।

संकल्पसिद्धाः तपोधनाः,

भवतां शुभानुध्यानेनैव खलु खलकलिबहुलोयं लोकः बहुळ-विपत्परीतोपि, विपुलपापभरितोपि, सकलदुर्गुणवलितोपि, न शिथिली भवति, न नश्यति, न भस्मीभवति। भवत्संकल्पेनैव अद्यापि आस्तिकाग्रेसरा राराजन्ते, देवा देवभाषा च स्वतेजसा यथातथं भ्राजन्ते, धर्माः सुकर्माणि च अविकलं प्रतिकलं प्रवर्तन्ते।

प्रपंचोद्धरणदीक्षिताः योगीन्द्राः,

भारतीयसंस्कारसंरक्षणाय संस्कृतप्रचारं प्रथमं साधनं मन्वानैः अस्मादृशैः क्षुद्रैरपि क्रियमाणां इमामल्पीयसीं सेवां आशीर्भिरनुमोद्य बहुळयित्वा च आस्तिकतासंरक्षणोपयोगिनीं आरचय्य सफलयन्तु इमां सभां सदस्यांश्च।

भक्तपराधीनाः धन्याः,

अकिंचनाः कृतज्ञताञ्जलिमात्रमर्पयामो वयं अस्मत्प्रार्थनाम-वितथयित्वा आगमनप्रयासमूरीकृतवद्भ्यः पादस्पर्शपवित्रितसभेभ्यः महद्भ्यो भवद्भ्यः॥

पराभवाधिक-
श्रावणशुक्लचतुर्थी

इति भवत्कृपावर्धिना
संस्कृतभाषाप्रचारिणी सभा, त्रिचूर.

# सुभाषितानि

श्री यन्० गमनाथार्यः

( पूर्वानुबन्धः )

पुराणमित्येव न साधु सर्वं न चापि सर्वं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरत् भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ २०३ ॥

Everything old is not good simply on account of its being old and similarly everything new is not without blemish: intelligent men adopt the one or the other after carefully examining every aspect. Fools are guided by the opinion of others.

गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोः मुकुरतले जायते यस्मात् ॥ २०४ ॥

Great men come to know about their worth only through others; the eyes can perceive themselves only through the help of a mirror.

धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसारमिदं जगत ॥ ॥ २०५ ॥

By righteous conduct prosperity, happiness, and everything is obtained; the whole world' has its essence in righteous conduct.

धारणाद्धर्म इत्याहुः धर्मेण विधृताः प्रजाः ।
यस्माद्धारयते धर्मः त्रैलोक्यं सचराचरम् ॥ ॥ २०६ ॥

Righteous conduct is called Dharma since it upholds everything; it is called Dharma since it upholds and protects everythihg, both movables and immovables, in all the three worlds.

अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु ।
रक्षणं समुपात्तानां एतद्वैभवलक्षणम ॥ ॥ २०७ ॥

Non-interference in otners affairs, persistent efforts in own's own duties, and the safeguarding of one's wealth acquired honestly, these are the qualities of greatness in a person.

[क्रमशः]

# पराभव दक्षिणायन (सेप्टम्बर 1966) परीक्षाणां कालसूची

| परीक्षाः | 10—9—66 | | 11—9—66 | | 1 —9—66 | |
|---|---|---|---|---|---|---|
| | 10 A. M. | 2 P. M | 10 A. M. | 2 P. M. | 10 A. M. | 2 P. M. |
| परिचयः | — | — | परिचयः | — | — | — |
| अभिज्ञः | — | — | प्रथमं पत्रम् | द्वितीयं पत्रम् | — | — |
| विचक्षणः | — | प्रथमं पत्रम् | द्वितीयं पत्रम् | तृतीयं पत्रम् | — | — |
| समर्थः | प्रथमखण्डे प्रथमं पत्रम् | प्रथमखण्डे द्वितीयं पत्रम् | द्वितीयखण्डे प्रथमं पत्रम् | द्वितीयखण्डे द्वितीयं पत्रम् | — | — |
| कोविदः | प्रथमखण्डः | द्वितीयखण्डः | तृतीयखण्डः | चतुर्थः खण्डः | पञ्चमखण्डः | — |

चित्तूरु,
10—8—66

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री.

## श्रीकालहस्तिनगरे चातुर्मास्यविद्वत्सभा

श्रीकांचीकामकोटिपीठाधिपतीनां जगद्गुरु श्रीशंकराचार्याणां चातुर्मास्यव्रतानुष्ठानस्थले श्रीकाळहस्तिक्षेत्रे तेषां सन्निधौ एका अखिलभारतविद्वत्सभा पराभव वत्सरे श्रावणमासे २६ दिनादारभ्य ३१ दिनपर्यन्ते (11–9–1966 – 16–9–1966) प्रचलिष्यति। अधोनिर्दिष्टेषु वेदेषु शास्त्रग्रन्थेषु च ये ये विद्वांसः परीक्षां दातुमुत्सुकाः, तेषां सर्वेषां अवकाशो दीयते।

**परीक्ष्यग्रन्थाः**

**वेदः**

| | | |
|---|---|---|
| १. **ऋग्वेदः** | — | सप्रातिशाख्यघनान्तः |
| २. **कृष्णयजुः** | — | सप्रतिशाख्यघनान्तः |
| ३. **शुक्लयजुः** | — | सप्रातिशाख्यघनान्तः |
| ४. **सामवेदः** | — | सपुष्पसूत्ररहस्यान्तः<br>ऋक् पदछान्दोग्ययुतः |
| ५. **अथर्ववेदः** | — | संहिता |

**शास्त्रम्**

| | | |
|---|---|---|
| १. **व्युत्पत्तिवादः** | -- | द्वितीयान्तः |
| २. **भाट्टरहस्यम्** | — | चतुर्थ्यन्तम् |
| ३. **वैयाकरणलघुमंजूषा** | – | प्रातिपदिकार्थसुबर्थविचारौ |
| ४. **खण्डनखण्डखाद्यम्** | — | प्रथमपरिच्छेदे प्रत्यक्षखण्डनान्तम् |

**परीक्षाक्रमः –**

वेदभागे वाचिकमात्रम्, इतरग्रन्थेषु वाचिकं लेखनं च।

वेदे शास्त्रविभागे च प्रथमश्रेण्यामुत्तीर्णानां कृते पञ्चशतरूप्यकाणि कम्बलद्वयं च, द्वितीयश्रेण्यामुत्तीर्णानां कृते सार्धद्विशतरूप्यकाणि एकं कम्बलं च प्रदीयते। मार्गव्ययोऽपि पृथक् दीयते। परीक्षां दातुं ये उत्सुकाः, ते सर्वे ३१—८—६६ दिनात्पूर्वमेव प्रार्थनापत्रं "मानेजर, श्रीकामकोटिसंस्थानम्, कालहस्ति (आ॰ प्र॰)" इति संकेतस्थानं प्रति प्रेषितुं प्रार्थ्यन्ते।

इत्थम्

म. वि. कृष्णमूर्तिः, मानेजर्

श्रीकाञ्चीकामकोटिसंस्थानम्, (Camp) कालहस्ति (A. P.)

# एकपुरुषान्तरस्य गाथा

अद्य अस्माकं निवासस्य आश्रयभूतः कालोऽयं चरित्रे अत्यंत-प्रधानभूतः संभाव्यते। अधुना भारतदेशः आदर्शभूते अभ्युदयपथे द्रुततरं पुरस्सरिति। पदे पदे प्रगतिप्रतिरोधिनीः बह्वीः जातीयाः अन्त-र्जातीयाश्च समस्याः अतीत्य प्रगत्यै प्रयामो वयम्।

अस्मदीयायाः अस्याः महायात्रायाः स्वरूपस्य प[रि]ज्ञानं

यद्यपेक्ष्यते तर्हि

समाचारपौरसम्बन्धशाखया

प्र[का]श्यमानां

## आन्ध्रप्रदेश् (नाम्नीं)

सचित्रां मासपत्रिकां

पठत !

मासि मासि 72, 000 प्रतीकाः विक्रीयन्ते

एक प्रतीकस्य मूल्यम् 30 पैसाः


T. RAMACHANDRA RAO,

*DIRECTOR*

DEPARTMENT OF INFORMATION AND PUBLIC RELATIONS,

ANDHRA PRADESH, HYDERABAD (A. P.)

आन्ध्रसर्वकारेणानुमोदिता R.C. No. 27-A 3/65 Date 14—7—65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिकाः

वृक्षाग्रवासी न च पक्षिराजः तृणं च शय्या न च राजयोगी ।
सुवर्णकायो न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः ॥

[ आम्रः ]

चक्री त्रिशूली न हरि र्न शम्भुः, महान् बलिष्ठो न च भीमसेनः ।
स्वच्छन्दचारी नृपति र्न योगी, सीतावियोगी न च रामचन्द्रः ॥

[ वृषभराजः ]

आद्येन हीनं जलधावदृश्यं, मध्येन हीनं भुवि वर्णनीयम् ।
अन्तेन हीनं ध्वनते शरीरं हेमाभिधः स श्रियमातनोतु ॥

[ करजः ]

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary, S. B. P. Sabha, Chittoor, (A. P.) India
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor, (A. P.) C. 1500.